॥ श्रीराधाप्रार्थना उद्धवकृता ॥

उद्धव उवाच ।
चेतनं कुरु कल्याणि जगन्मातर्नमोऽस्तुते ।
त्वमेव  प्राक्तनं  सर्वं कृष्णं द्रक्ष्यसि साम्प्रतम् ॥ १॥

त्वत्तो विश्वं पवित्रं च त्वत्पादरजसा मही ।
सुपवित्रं त्वद्वदनं पुण्यवत्यश्च गोपिकाः ॥ २॥

लोकास्त्वामेव गायन्ति गीतैर्मङ्गलसंस्तवैः ।
त्वत्सुकीर्तिं च वेदाश्च सनकाद्याश्च संततम् ॥ ३॥

कृतपापहरां पुण्यां तीर्थपुजां च निर्मलाम् ।
हरिभक्तिप्रदां भद्रां सर्वविघ्नविनाशिनीम् ॥ ४॥

त्वमेव राधा त्वं कृष्णस्त्वं पुमान् प्रकृतिः परा ।
राधामाधवयोर्भेदो न पुराणे श्रुतौ तथा ॥ ५ ॥

॥ इति श्रीब्रह्मवैवर्ते पुराणे श्रीकृष्णजन्मखण्डे
उद्धवकृता श्रीराधा प्रार्थना सम्पूर्णा ॥